॥१॥ श्रीगणेशायनमः अथ गोशतदानम् ॥ भविष्यपुराणे शतंगावः सवृष
भा धेनुपस्कर संयुताः ॥ दत्वा सुब्राह्मणेभ्यस्तु विशुद्धेनांतरात्मना ॥१॥
शिवादि सर्व लोकेषु यथेष्टं मोदते तु सः ॥ पुण्यकालेशुचिराचम्य प्राणा
नायम्य देशकालौ संकीर्त्य मम समस्तेह जन्मनि जन्मांतरेवा बाल्ययौ
वन वार्द्धक्यावस्थासु वाक् पाणि पाद पायूपस्थ घ्राण रसना चक्षुः स्पर्शन
श्रोत्र मनोभिश्चरित ज्ञाताज्ञात कामाकाम महापातकोपपातक संक्षयपू
र्वक सिद्धचारण सेविताकीर्ण किंकिणीजाल माल विमानारोहणोत
र मन्वंतराव च्छिन्ने न्द्रादि सकललोक पालाधिकरणक पुत्रपौत्र ॥१॥

समन्वित शिव पुराद् सर्वलोक वासानंतर मंते विष्णु सायुज्यावा
प्ति कामो वृषाधिक यथा सालंकृत गोशत दान महं करिष्ये इति सं
कल्प्य ॥ तदंगत्वेन श्राचार्यवरणं गणपति पूजन स्वस्ति पुण्याह
वाचन सवृषभ गावाः संपूजनं करिष्ये ॥ गणेशादि पूजनानंतरं
प्रतिग्रहीताऽऽचार्यान्यब्राह्मणांश्च यथाशक्ति वस्त्रालंकारादिभिः सं
पूज्य तत्रायंमंत्रः विष्णुरूपिद्विजश्रेष्ठ भूदेव पंक्ति पावन। यज्ञरू
पनमस्तेस्तु पात्ररूपनमोस्तुते॥१॥ अनेन मंत्रेणसंपूज्य सतिल
जलकुशद्रव्य मादाय संकल्पं पठेत्॥ अद्येहेत्यादि शुभ पुण्य फल

॥२॥ प्राप्तिकामः मम समस्तपापक्षय पूर्वक विष्णुसायुज्यावाप्तिकामो:
अमुकगोत्रं अमुकप्रवर ममुकशर्म्माणं ब्राह्मणं अमुकवेदैकशा
षाध्यायिन मेभिः वस्त्रालंकारादिभिः रोचनाक्षत पूगफल द्रव्यैर
स्मिन् गोशतदानकर्म्मणि आचार्य्यत्वेन त्वामहं वृणे वृतोस्मीति प्र
तिवचनम् प्रार्थना त्वं देव सर्वगुणमंदिर सर्वभूत विश्वेश्वर विपथ
गोदधि पर्वतानाम्। त्वद्दानशक्तिशकलीकृत पापकोट्यः प्राप्तास्मि
निर्वृति मतीव परां नमामि॥१॥ विष्णुरूपि द्विजश्रेष्ठेति प्रार्थयेत्॥
अनेनैव क्रमेणान्येभ्योपि ब्राह्मणेभ्यो वस्त्रालंकारादिभिः संपूज्य प्रा

॥२॥

र्पयेत् ॥ ततः स्वर्णशृंगमयीं रजतखुरान् ताम्रपृष्ठमयीं पुच्छे मौ
क्तिकान् कंठेसघंटां दोहनपात्रसहितां सर्वालंकृतां गोवां संपूज्यानं
तरं दद्यात् तत्रादौ गावांमंगन्यासः ॥ शृंगमूले ब्रह्मविष्णू न्यसा
मि । शृंगाग्रे सर्वतीर्थानि न्य० । शिरोमध्ये महादेवं न्य० । ललाटाग्रे म
हादेवीं न्य० । नासावंशे षण्मुखं न्य० । कर्णयोरश्विनौ देवौ न्या० । चक्षु
षोः शशिभास्करौ न्य० । दन्तेषु सर्ववायून् न्य० । जिह्वायां वरुणं न्य०
हुङ्कारे सरस्वतीं न्य० । उरसि साध्यान् न्य० । चतुष्पादेषु धर्मं न्य० ।
खुरमध्ये गंधर्वान् न्य० । खुराग्रे पन्नगान् न्य० । खुरपार्श्वे प्सरः

